विसर्पितु मित्यर्थे पुरा क्रूरस्य विसृप इत्यत्र कसुन् एव मव्ययावपि तोसुन् कसुनौ षष्ठ्यपवादकाविति तयोः कृत्त्वेन प्रसक्ताया अव्यय त्वेन प्रतिषिद्धायाः षष्ठ्याः प्रतिप्रसवोयम् ।

शब्दै स्तुलोपमाभिन्नै र्योगे सादृश्यवाचिभिः ।

प्रतियोगिनि षष्ठी च तृतीया चानुशिष्यते ॥१०॥

सादृश्यवाचिभि स्तुल्यसदृशादिशब्दै र्योगे चन्द्रेण चन्द्रस्य वा सदृश इत्यादौ तृतीया षष्ठी च प्रतियोगित्व मभिधत्ते। चन्द्रस्य तुला चन्द्रस्योपमे त्यत्र षष्ठ्येव प्रमाणम् । न तृतीया। "तुल्यां यदा रोहति वाससा" इत्यत्र "स्फुटोपमं भूतिसितेन शंभुना" इत्यत्रच सहार्थे तृतीया, समंचमयैवतुलाभिलाषिणइतिवत्। चन्द्रवन्मुखमित्यादौ इवादि शब्दयोगे न तृतीया षष्ठीवा, "तुल्यार्थै रतुलोपमाभ्यां तृतीयान्यतरस्या" मिति सूत्रे बहुवचनेनैव कडारा इत्यादाविव तुल्यप्रभृतिलाभे प्यर्थग्रहण सामर्थ्येन यथेवादिशब्दानां पर्युदाससिद्धेः । वस्तुतो ऽन्योन्याभावार्थ कस्य नञः प्रतियोगित्वविशेषादावर्थे पंचमीषष्ठ्यादेरिव इवादिनिपा· तानामपि विभक्तिविशेषनिर्व्यपेक्षत्व स्वाभाव्यात् ।

यत्तु· निपातानां सर्वत्रदर्शने न्वितभिधानमेव व्याप्यं, नञश्च प्रतियोगित्व सांसर्गिकविषयताका न्योन्याभावादिविषयक बुद्धाविवस्व प्रतियोगित्व सांसर्गिकविषयतानिरूपित सादृश्यविषयताविशिष्ट बुद्धौ संकेतस्ययुक्तत्वात; अतएव केवला दिवादिपदा दनन्तरेण मुखादिपदेन तुल्यंमुखमित्यादाविव सादृश्यविशिष्टं मुखं नप्रत्याय्यते, निष्प्रतियोगिक सादृश्यबोधने इवादीना मसामर्थ्यात । अतएवेवादिपदेन प्रतियोगित्वा· नुयोगित्व स्वरूपोमानत्वोपमेयत्वयोः श्रुतिमात्रेणावगमा दिवादिशब्द· योगे श्रौतीमुपमा मुदाहरन्त्यालंकारिकाः । प्रतियोगित्वादि संसृष्टसा· दृश्यानुभवं प्रती वादिपदसामर्थ्यावधारणेपि सादृश्यत्वमात्रेण स्मरणं ना नुपपन्नं, एवं च चन्द्रइव चन्द्रोनेत्यादौ संसर्गतयालभ्येर्थे न षष्ठ्यादि,

उक्तार्थानामप्रयोगात्, पक्त्वाभुङ्क्तेइत्यादौ भावेक्त्वाप्रत्ययेन संसर्गीभूत मानकर्तृकत्वलाभा च्चैत्रेण पक्त्वा चैत्रो भुंक्तइत्यादयो न प्रयोगाइति तच्चिन्त्यं, समानकर्तृकत्व सांसर्गिकविषयिता निरूपित धातुप्रयो विषयता विशिष्टानुभवे क्त्वासङ्केतोपगमे चैत्रः पक्त्वा चैत्रेणभुज्यते प्रयोगापत्तेः, अन्यलभ्ये संसर्गे घटो न चन्द्रइवेत्यादौ प्रातिपदिकार्थप्र प्रथमापत्ते रिति दिक् ।

आयुष्यमद्रकुशल सुखप्रभृतिभि र्हितैः ।
योगेचतुर्थीषष्ठीवा तत्राशिष्यनुशिष्यते ॥११॥

आयुष्यं चिरजीवितं, मद्रममंगलनिवृत्तिः, कुशलमनामयं, सु एतदर्थै र्हितशब्देन च योगे तस्मै तस्यवायुष्यंवाभूयादित्यादा वाशी रथ लकारयोगे षष्ठी चतुर्थी च साधुः ।

इति पदवाक्यरत्नाकरे षष्ठी विवरणम् ॥६॥

---

ङ्योस्सुपस्सप्तमीतत्रानुबन्धौ ङिसुपोर्ङ्यौ ।
अथाधिकरणंसप्तम्यर्थो धात्वर्थसंगतम् ॥१॥

अधिकरण मधिकरणत्व माधेयत्वंवा सप्तम्यर्थः । तच्चाधेय स्थाल्या मोदनंपचतीत्यादौ कर्मघटित सामानाधिकरण्येनफले, गेहे पचतीत्यादौ कर्तृ घटित सामानाधिकरण्येन व्यापारेऽन्वेति । "यां त्वग्नौपचेदन्नं तत्र होमोविधीयते" इत्यादावग्निपदं स्थालीपरं, तद यत्वं सामानाधिकरण्येन पच्यर्थफलेन्वेति । भवतुवा परंपरयावह्नि धेयत्वमेव सप्तम्यर्थः, अतएव तच्छब्देन वह्नेः परामर्शोपि संघट मिथिलास्थो राजा पाटलीपुत्रे ब्राह्मणेभ्यो ददातीत्यादौ सप्तम्यर्थो प्रदान घटित सामानाधिकरण्येन धात्वर्थेन्वेति, किंतु साक्षादेव प्र

णेषु । एवं गिरौ वृक्षात् पर्णपततीत्यत्रापि सप्तम्यर्थो वृक्षे
पादान घटित परंपरया पतने । यदाहुः- " कर्तृकर्म व्यवहि
धारयत क्रियाम् । उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणंस्मृ
दैशिककालिकान्यतरसंसर्गावच्छिन्न मधिकरणत्व माधेयत्वंश
तादृशंच क्रियाधिकरणत्वं कर्तृकर्माधिकरण एव स्वीक्रियते
त्रेत्यपिवदंति । अत्रच क्वचिदाख्यातोपस्थितकालावच्छिन्न
त्वमेवसप्तम्या प्रत्याय्यते, गृहान्निर्गत्य अंगणेपचमानेचैत्रेः
च्चतीति नप्रयोगः । क्वचिदन्यकालावच्छिन्नम प्यधिकरणत
भाविनीं चैत्राधिकरणता मभिसंधाय ग्रामेगच्छतीति प्रयु
पेतिष्ठतीत्यादौ आतपपदं तत्संयुक्त प्रदेश परमिति संक्षेप

समभिव्याहृताचेत्स्या द्विषयार्थकधातुभिः ।
वैज्ञानिकाधिकरणं तदानिर्वक्तिसप्तमी ॥ १ ॥

सविषयार्थक धातुसंवलिता सप्तमी विशेष्य निरूप
स्वरूपां वैज्ञानिकी माधेयता मभिधत्ते, शुक्तौ रजतत्व
च्छति वेत्यादौ शुक्तिविशेष्यतानिरूपकप्रकारत्वा
त्वात्मककर्मघटितपरम्परया ज्ञानादावन्वेति ।

दूरान्तिकार्थकाच्छब्दा दाधारेसप्तमीविधिः ।
विभक्त्यन्तरतोबाधे प्रतिप्रसवतांगतः ॥२॥

सप्तम्यधिकरणेचेति सूत्रेचकारेण दूरान्तिकार्थकशब्द
सप्तमीविधिर्यद्यपि नाप्राप्तप्रापकः, तथापि दूरान्तिकार्थेभ्यो
सूत्रेण प्राप्ताभिर्द्वितीयातृतीयापंचमीभिः सप्तम्याबाधप्रसक्तौ
निकल्पोयम् । तथा च ग्रामाद्दूरन्दूरेण दूराद्दूरेवावन
प्रयोगा स्साधवः ।

सप्तमी स्यात् कर्मणि वा यदिष्टादिपदादिनिः ।
अन्येतु नित्यमेवात्र सप्तमीयाचचक्षिरे ॥४॥

इष्टादिगणा दुत्पन्नस्य कर्तरीनिप्रत्ययस्य योगे कर्मणि सप्तम्य यां चानुशिष्यते, तेनाधीतीवेदान् वेदेषु वेत्यादौ वेदकर्मका हर्तेति बोधः । अत्र मुख्ये कर्मण्येव सप्तमी, नतु गौणे, ास मधीतीत्यादयः प्रयोगाः सूपपादाः ।

इति पदवाक्यरत्नाकरे कारकसप्तमी विवरणम ॥

निमित्ता त्कर्मसंयोगे या सप्तम्यनुशिष्यते ।
चतुर्थ्या इव तादर्थ्य मर्थो स्या इति शाब्दिकाः ॥१॥

" चर्मणि द्वीपिनं हन्ति दन्तयो र्हन्ति कुंजरम् । केशेषु हन्ति सीम्नि पुष्कलको हतः ॥ " इत्यादौ सप्तमी चतुर्थीव मथवा तृतीयाव न्निमित्तत्व मभिधत्ते । चर्मार्थं द्वीपिहननमिति र्थः । सीमा अण्डकोशः । पुष्कलको गन्धमृगः । " सीमा ग्रतिक्षेत्रे ष्वण्डकोशेषु च स्त्रियाम् " " अथ पुष्कलको गन्ध पणकीलयो " रिति मेदिनी । सीमा घाटा, तज्ज्ञानार्थं पुष्क शंकुः, हतो निखात इत्यर्थः, इति हरदत्तः । अत्र कर्मणा समवायो वा निमित्ते स्वरूपसन्नेव सप्तमीसाधुतायां प्रयोज- शाब्दबोधविषय इति शाब्दिकाः । कर्म क्रिया, तद्योगे तादर्थ्य भिधत्त इति सूत्रार्थः । अत एव अविद्यारजनीक्षये यदुदेती निमित्तसप्तमी उपपद्यत इत्यपरे ।

यत्कर्मकर्तृको भावः परतन्त्रतया स्थितः ।
लक्षकोऽन्यस्य भावस्य ततो भवति सप्तमी ॥२॥